राजस्थान पुरातन ग्रन्थमाला

प्रधान सम्पादक–फतहसिंह, एम. ए., डी. लिट्.

[ निदेशक, राजस्थान प्राच्यविद्या प्रतिष्ठान, जोधपुर ]

ग्रन्थाङ्क ६५

रघुनाथ-मनोहर-प्रणीतः

# कविकौस्तुभः



प्रकाशक

राजस्थान-राज्य-संस्थापित

राजस्थान प्राच्यविद्या प्रतिष्ठान

जोधपुर ( राजस्थान )

RAJASTHAN ORIENTAL RESEARCH INSTITUTE, JODHPUR.

राजस्थान पुरातन ग्रन्थमाला

प्रधान सम्पादक – फतहसिंह, एम. ए., डी. लिट्.

[ निदेशक, राजस्थान प्राच्यविद्या प्रतिष्ठान, जोधपुर ]

ग्रन्थाङ्क ९५

रघुनाथ-मनोहर-प्रणीतः

# कविकौस्तुभः

प्रकाशक

राजस्थान-राज्य-संस्थापित

राजस्थान प्राच्यविद्या प्रतिष्ठान

जोधपुर (राजस्थान)

AJASTHAN ORIENTAL RESEARCH INSTITU

१९६८ ई०

त्ति ५००

# राजस्थान पुरातन ग्रन्थमाला

राजस्थान-राज्य द्वारा प्रकाशित

सामान्यतः अखिलभारतीय तथा विशेषतः राजस्थानदेशीय पुरातन
संस्कृत, प्राकृत, अपभ्रंश, हिन्दी, राजस्थानी आदि भाषानिब
विविधवाङ्मयप्रकाशिनी विशिष्ट-ग्रन्थावली

प्रधान सम्पादक

फतहसिंह, एम. ए., डी. लिट्.

निदेशक, राजस्थान प्राच्यविद्या प्रतिष्ठान, जोधपुर

ग्रन्थाङ्क ९५

रघुनाथ-मनोहर-प्रणीतः

# कविकौस्तुभः

प्रकाशक

राजस्थान-राज्याज्ञानुसार

निदेशक, राजस्थान प्राच्यविद्या प्रतिष्ठान

जोधपुर ( राजस्थान )

१९६८ ई०

भारतराष्ट्रीय शकाब्द

# प्रधान संपादक का वक्तव्य

प्रस्तुत पुस्तक तत्कालीन-संचालक श्री मुनि जिनविजय द्वारा संभवतः सन् १६५१ में मुद्रित होने के लिए प्रेस में भेजी गई थी परन्तु अनेक कारणों से इसका प्रकाशन अभी तक नहीं हो सका था। अतः इस विलम्बित प्रकाशन के लिए क्षमा-याचना करता हुआ, इस ग्रन्थ को सुविज्ञ पाठकों के समक्ष उपस्थित करते हुए मैं सन्तोष का अनुभव करता हूँ।

इस ग्रन्थ के अन्त में स्वर्गीय प्रोफेसर पी. के. गोडे द्वारा लिखित टिप्पणियों, परिशिष्टों तथा ग्रंथकार-परिचय को अंग्रेजी भाषा में 'पूना ओरियन्टलिस्ट' से उद्धृत किया गया है, जिसके द्वारा 'कविकौस्तुभ' एवं उसके रचयिता 'रघुनाथ-मनोहर' के विषय में पर्य्याप्त जानकारी मिल जाती है।

१६ पृष्ठों में समाप्त इस कृति का परिचय सर्वप्रथम श्री गोडे द्वारा ही विद्वज्जगत् को कराया गया। यह ग्रन्थ काव्यशास्त्र के एक बहुत छोटे अंश को अपना लक्ष्य बनाकर प्रकट हुआ है; केवल वाक्य-दोषों और पद-दोषों का निरूपण करना ही लेखक को अभीष्ट है। इस सीमित क्षेत्र में लेखक ने पर्याप्त सफलता प्राप्त की है। प्रत्येक दोष के चुने हुए उदाहरण देकर लेखक ने साहित्य के विद्यार्थियों के लिए उपादेय सामग्री प्रस्तुत की है। लेखक ने पूर्वाचार्यों द्वारा वर्णित काव्यदोषों को संक्षेप में गिनाने के पश्चात्, उनको वाक्य-दोषों और पद-दोषों में विभाजित करके, प्रत्येक प्रकार का पृथक्-पृथक् सरल और रोचक ढंग से विवेचन किया है। प्रत्येक दोष की छन्दोबद्ध व्याख्या-स्वरूप दोष का सोदाहरण लक्षण प्रस्तुत करके विभिन्न काव्य-ग्रन्थों से अपने कथन की सम्पुष्टि के लिए अनेक उद्धरण भी प्रस्तुत किये हैं। इस प्रसंग में विशेष उल्लेखनीय बात यह है कि लेखक ने अपनी रचना के दोष भी उदाहरण-स्वरूप उपस्थित किये हैं, जैसा कि निम्नलिखित उद्धरण से स्पष्ट है—

क्रमेण वाक्यदोषानाह—

(१) छन्दोभ्रष्टादि-व्याख्या यथा—

हीनं यद्वृत्तं भेदेन छन्दोभ्रष्टं स्मृतं यथा।
नवजलधरनिभो राजते नन्दनन्दनः ॥७॥

अत्र छन्दसि, मद्विरचितछन्दोरत्नावल्याम्—

यदि द्वितीयं च चतुर्थपञ्चमं तथाष्टमं तद्दशमं भवेद्गुरुः ।
यदाक्षरं द्वादशकं महीपते गिरन्ति वंशस्थमनल्पधीषणाः ।।९।।
यदा द्वितीयं च तथा चतुर्थं सखे भवेत् पञ्चमकं च दीर्घम् ।
तथाष्टमं वा दशमं तथान्त्यमुपेन्द्रवज्रां नृप तां गिरन्ति ।।१०।।

इति वृत्तद्वये व्याहृते सति वंशस्थे उपेन्द्रवज्राचरणप्रवेशभिन्नत्वाच्छन्दोभ्रष्टदोषः ।

अन्त में स्वर्गीय डा० पी. के. गोडे को हार्दिक धन्यवाद अर्पित करना मैं अपना कर्त्तव्य समझता हूँ जिन्होंने इस अप्रकाशित ग्रन्थ पर प्रकाश डालकर काव्यशास्त्र के क्षेत्र में इस नये पुष्प का उद्घाटन किया ।

वसन्त पञ्चमी, सं० २०२४
जोधपुर

फतहसिंह

रघुनाथ-मनोहरकृतः

# कविकौस्तुभः ।

॥ श्रीगणेशाय नमः ॥

अथ काव्यप्रबन्धानां शल्यरूपान्[1] समासतः ।
दोषान् वक्ष्ये क्रमेणैव पूर्वाचार्यैः प्रदर्शितान् ॥ १ ॥
छन्दोभ्रष्टं क्रियाव्यस्तं क्रमहीनमसंमितम् ।
अपार्थं व्यस्तसम्बन्धं श्लिष्टागमविरोधि च ॥ २ ॥
यतिभ्रष्टं तथा न्यूनपदं चैकार्थमेव च ।
व्यर्थं रीतिपरिभ्रष्टमवस्थाद्रव्यभेदकम् ॥ ३ ॥
तथा देशकलान्यायकालहेतुविरोधिकम् ।
खण्डिताधिपदे चैव तथा हीनोपमं स्मृतम् ॥ ४ ॥
इति वाक्यात्मका दोषाः, पददोषास्ततः क्रमात् ।
स्वसङ्केतप्रक्लृप्तार्थमप्रसिद्धमलक्षणम् ॥ ५ ॥
अगौरवं श्रुतिकटु पुनरुक्तिरसंमतम् ।
व्याहतार्थं तथा ग्राम्यं पददोषाः स्मृता यथा ॥ ६ ॥

## [ १. वाक्यदोषाः । ]

क्रमेण वाक्यदोषानाह ।

§ १. ) छन्दोभ्रष्टादि-व्याख्या यथा –

हीनं यद्वृत्तं भेदेन छन्दोभ्रष्टं स्मृतं यथा ।
नवजलधरनिभो राजते नन्दनन्दनः ॥ ७ ॥

अन्यच्च, घावुककवेः काव्यशेखरे –

तव प्रभावश्रम एष संयुगे फलं न यास्यत्युपभोगलब्धये ।
मयि प्रतापोग्रतरे वरिष्ठे विकासितं स्तनमिवात्रकेशिनः ॥ ८ ॥

अत्र छन्दसि, मद्विरचितछन्दोरत्नावल्याम् –

यदि द्वितीयं च चतुर्थपञ्चमं तथाष्टमं तद्दशमं भवेद् गुरु ।
यदाक्षरं द्वादशकं महीपते गिरन्ति वंशस्थमनल्पधीषणाः ॥ ९ ॥

---

१ °रूपान्समासतः.

यदा द्वितीयं च तथा चतुर्थं सखे भवेत् पञ्चमकं च दीर्घम् ।
तथाष्टमं वा दशमं तथान्त्यमुपेन्द्रवज्रां[1] *नृप तां गिरन्ति ॥ १० ॥

इति वृत्तद्वये व्याहृते सति, वंशस्थे उपेन्द्रवज्राचरणप्रवेशभिन्नत्वाच्छन्दोभ्रष्टदोषः । तथा च सुश्रुते [ ? ]–

वटप्ररोहो मधुकुष्ठमुत्पलं सलाजचूर्णैर्गुटिकां विदध्यात् ।
सुसंहिता सा वदनेऽवधारिता तृष्णां प्रवृद्धामपि हन्ति सज्वराम् ॥ ११ ॥

छन्दोरत्नावल्यां यथा –

यत्राक्षरं स्यात् प्रथमं द्वितीयकं तुर्यं तथा पञ्चमकं नृपाष्टमम् ।
एकादशाद्यान्त्यमकं यदा गुरु तामिन्द्रवंशां फणिभाषितां जगुः ॥ १२ ॥

इति वृत्तभेदे सति, वंशस्थे इन्द्रवंशाचरणप्रवेशभिन्नत्वाच्छन्दोभ्रष्टदोषः । तथा च माघे [ शिशुपालवधे १.६५ ] तपेन वर्षाः[2] शरदेत्यत्र [॥ १३ ॥] प्रसूनक्लृप्तिमित्यत्र[3] संयोगाद्यगुरुत्वाज्जगणे यगणप्राप्तिहेतोश्छन्दोभ्रष्टदोषः ।

§ २.) क्रियाव्यस्तं यथा –

क्रियाभ्रष्टं तु यद्वाक्यं क्रियाव्यस्तं स्मृतं बुधैः ।
यथा शम्भुं सदानन्दं मनसा कुसुमैर्नवैः ॥ १४ ॥

अन्यच्च रघुवंशे [ १६.६७ ]–

उद्बद्धकेशश्च्युतपत्रलेखो विश्लेषिमुक्ताफलजातशोभः ।
मनोज्ञ एव प्रमदामुखानामम्भोविहाराकुलितोऽपि वेषः ॥ १५ ॥

मुहूर्तचिन्तामणौ [ ५.४१ ]–

कवीज्यचन्द्रलग्नपा[4] रिपौ मृतौ *व्रतेऽधमाः[5] ।
व्ययेऽब्जभार्गवौ तथा[6] तनौ मृतौ सुते खलाः ॥ १६ ॥

किरातार्जुनीये[7] [ ५.२५ ]–

कुररीगणः कृतरवस्तरवः कुसुमानताः सकमलं कमलम् ।
इह सिन्धवश्च वरणावरणाः करिणां मुदे सनलदानलदाः ॥ १७ ॥

तथा च मम्मटः [ काव्यप्रकाशे १.१ ]–

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥ १८ ॥

---

१ °मुपेन्द्रवज्रारष्पुपुना गीता. २ वषाः. ३ प्रसुन° ४ लग्नपास्तनौ for लग्नपा रिपौ ५ सुतेधमाः. for व्रतेऽधमाः. ६ तथ. ७ किरातार्जुनिये.

तथा च माघे [ शिशुपालवधे २.८ ] –

भवद्गिरामवसरप्रदानाय वचांसि नः।
पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः॥ १९॥

एतेषु छन्दःस्वर्थलक्ष्यगोचरत्वहीनत्वात् क्रियाव्यस्तदोषः।

§ ३.) क्रमहीनं यथा –

क्रमेण यद्विहीनं स्यात् क्रमहीनं तु तद्यथा।
कश्चिद्भुक्त्वा कृतस्नानो वन्दते देवतां गुरुम्॥ २०॥

अन्यच्च, रत्नमालायाम् [ श्लोकः १ ] –

प्रभवविरतिमध्यज्ञानवन्ध्या नितान्तं
विदितपरमतत्त्वा[1] यत्र ते योगिनोऽपि।
तमहमिह निमित्तं विश्वजन्मात्ययाना-
मनुमितमभिवन्दे भग्रहैः कालमीशम्॥ २१॥

अत्र प्रभवविरतिमध्या उत्पत्तिलयस्थितय इति प्रकृत्यर्थे सति, उत्पत्तेर्लये जाते स्थितेरसम्भवात् क्रमहीनदोषः।

तथा, रघुवंशे [ ९.६१ ] –

तेनाभिघातरभसस्य विकृष्य पत्री
वन्यस्य नेत्रविवरे महिषस्य मुक्तः।
निर्भिद्य विग्रहमशोणितलिप्तपुङ्ख-
स्तं पातयां प्रथममास पपात पश्चात्॥ २२॥

अत्र कृभ्वस्तियोगे क्रमाद्धातोराम्यासप्राप्तौ[2] सत्यां 'प्रथम'-पदव्यभिचारेण क्रमहीनदोषः।

§ ४.) असंमितं यथा –

असंमितं मतं यत्र तौल्यं नास्ति पदार्थयोः।
हरो भाति मरुद्वेषिराजराजितविग्रहः॥ २३॥

अन्यच्च, रसमञ्जर्याम् [ श्लोकः २९ ] –

कर्णकलिपतरसालमञ्जरीपिञ्जरीकृतकपोलमण्डलः।
निस्सरन्नयन[3]वारिधारया राधया मधुरिपुर्निरीक्ष्यते॥ २४॥

नैषधे [ १२.१०१ ] –

उन्मीलल्लीलनीलोत्पलदलदलनामोदमेदस्विपूर-
क्रोडक्रीडद्विजालीगरुदुदितमरुत्स्फालवाचालवीचिः।

---

१ °तत्त्वा. २ क्रमाद्धातोराम प्राप्तौ. ३ निःसरन्.

एतेनाखानि शाखानिवहनवहरित्पर्णपूर्णद्रुमाली-
व्यालीढोपान्तशान्तव्यथपथिकदशां दत्तरागस्तडागः ॥ २५ ॥

इत्यादिषु शब्दार्थयोस्तौल्यहीनत्वात्, किं बहुना, पदबाहुल्यादसंमितदोषः ।

§ ५. ) अपार्थं यथा –

समुदायार्थशून्यं यत् तदपार्थं समुच्यते ।
हयबृंहितविस्पर्धि राजते घनकूजितम् ॥ २६ ॥

अन्यच्च, रघुवंशे [ ९.२६ ]–

कुसुमजन्म ततो नवपल्लवा-
स्तदनु षट्पदकोकिलकूजितम् ।
इति यथाक्रममाविरभून्मधु-
द्रुमवतीमवतीर्य वनस्थलीम् ॥ २७ ॥

अत्र कुसुमजन्म ततोऽग्रे नवपल्लवास्तदनु षट्पदकोकिलकूजितमिति यथाक्रमं मधुराविरभूदित्यन्वये, कुसुमजन्मतोऽग्रे पल्लवकारणं कुसुमं न सम्भवतीति हेतोरपरं कोकिलानां कूजितं भ्रमराणां गुञ्जितमित्युक्तं च कविकल्पलतायाम्–

गुञ्जारवो मिलिन्दानां हेषा ह्रेषा च वाजिनाम् ।
केका स्यात् केकिनां वाणिः कोकिलानां तु कूजितम् ॥ २८ ॥

तथा च,

सम्भवस्यानिबन्धोऽपि निबन्धोऽप्यसतः क्वचित् ।
नियमश्च विशेषेण कवीनां वर्णनं त्रिधा ॥ २९ ॥

इति कविरूढनियमतया द्वन्द्वान्तपदस्य प्रत्येकं सम्बन्धादुभयोर्व्यधिकरणादिति समुदायार्थशून्यत्वादपार्थदोषः ।

§ ६. ) व्यस्तसम्बन्धं यथा –

पदानां व्यस्तता यत्र व्यस्तसम्बन्ध उच्यते ।
शम्भोर्देयाच्छिवं मह्यं पदपद्मं जगद्गुरोः ॥ ३० ॥

अन्यच्च चन्द्रशेखरस्य काव्यकुतूहले–

अम्बरमम्बुनि पत्रमरातिः पीतमहीनगणस्य ददाह ।
यस्य वधूस्तनयं गृहमब्जा पातु स वो हरलोचनवह्निः ॥ ३१ ॥

अत्रान्वयिपदानां विपर्यासाद् व्यस्तसम्बन्धदोषः ।

---

१ °दशां. २ °कुजितं. ३ कुजितं. ४ वाणि कोकि°. ५ कुजितं. ६ देयात् शिवं. ७ काव्यतूहले.

किरातार्जुनीये [ ९.३१ ]–

गन्धमुद्धतरजःकणग्राही विक्षिपन् विकसतां कुमुदानाम् ।
आदुधाव परिलीनविहङ्गा यामिनीमरुदपां वनराजीः ॥ ३२ ॥

अत्रापामिति व्यस्तपदप्रयोगाद् व्यस्तसम्बन्धदोषः ।

§ ७. ) **श्लिष्टं** यथा –

पदान्यन्वयवद्यत्र श्लिष्टानि श्लिष्टमुच्यते ।
अहं विभूतये शान्तं पार्वतीरमणं भजे ॥ ३३ ॥

अन्यच्च, भवभूतेः साहित्यरत्नाकरे –

कोदण्डसन्नद्धशिलीमुखोऽयं क्षितीश्वरः श्रीविजयस्य हेतोः ।
सामन्तवीरध्वनिकीर्णजन्यं प्रबुद्धपश्चास्य इवाविवेश ॥ ३४ ॥

अत्रान्वयवत्पदानां विरचनत्वात् श्लिष्टदोषः ।

तथा मम्मटः [ काव्यप्रकाशे १.१ ]–

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥ ३५ ॥

अत्राप्यन्वयवत् पदानां विरचनत्वात् श्लिष्टदोषः । रघुवंशे [ ५.३६ ] ब्राह्मे मुहूर्तेति । ॥ ३६ ॥

§ ८. ) **आगमविरोधि** यथा –

अशास्त्रमुच्यते वाक्यं तदागमविरोधि च ।
कृताध्वरोऽयं भूपालः कथं स्वर्गं प्रयास्यति ॥ ३७ ॥

अन्यच्च, किरातार्जुनीये[1] [ १.४४ ]–

अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः सन् जुहुधीह पावकम् ॥ ३८ ॥

अत्र जटाधरः सन् पावकं जुहुधीति[3] धिक्कारवचनं पतिरेव व्रतं यस्यास्तस्या न योग्यमिति धर्मशास्त्रविरुद्धत्वादागमविरोधिदोषः ॥

§ ९. ) **यतिभ्रष्टं** यथा –

मध्ये नाम्नश्च विरतिर्यतिभङ्गः स उच्यते ।
यथा शिवमहं कर्पूरगौरं प्रणमामि तम् ॥ ३९ ॥

अन्यच्चे, सङ्गीतरत्नाकरे[4] [ ]–

पुलकितकुचभारभुग्नमध्या तरलसरोरुहपत्रदीर्घनेत्रा ।
किसलयतनुरङ्गना प्रियं कौसुमनवमाल्यभरा समालिलिङ्ग ॥ ४० ॥

---

१ किरातार्जुनिये. २ विहंगागा यामिनी° ३ धिःकार°. ४ संगितरत्नाकरे.

अत्र कौसुमनवमाल्यभरेत्यत्र चरणान्तयतिभङ्गाद्यतिभ्रष्टदोषः ।

भर्तृहरौ [ नीतिशतके ४ ]–

लभेत सिकतासु तैलमपि यत्नतः पीडयन्[1]
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटन्[2]शशविषाणमासादये-[3]
न्नतु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ४१ ॥

अत्र प्रथमचतुर्थचरणयोर्यतिभङ्गे, छन्दोरत्नावल्याम् –

सखे यदि च षष्ठकं तदनु चाष्टकं द्वादशं
द्वितीयमपि यत्र वा गुरु च षोडशाद्यान्त्यगौ ।
चतुर्दशमथ क्रमात् सकलभाग्यवारां निधे
श्रुतिद्वयसरीसृपैर्विरतिरङ्ग पृथ्वी मता ॥ ४२ ॥

अत्र पृथ्वीछन्दसि श्रुतिद्वयसरीसृपैरष्टनवभिरक्षरैर्यतिरिति व्याख्यायां सत्यां, सिकतासु तैलमित्यत्र प्रतिनिविष्टमूर्खजनचित्तमित्यत्र यतिविच्छेदा[4]द्यतिभ्रष्टदोषः ।

§ १०.) न्यूनपदं यथा –

पदस्य हीनता यत्र वाक्यं न्यूनपदं मतम् ।
सन्तुष्टः कमलानाथः पापिनां मुक्तिमाददौ ॥ ४३ ॥

पापिनामत्रापिपदं न्यूनम् ।

अन्यच्च, कविमण्डनस्य ऋतुपञ्चाशिकायाम् –

गुञ्जन्तः किल मुकुलेषु मत्तभृङ्गाः
संयाते स्मरनृपतौ सितेषु रेजुः ।
भेरीणां प्रसवितपाटले निदाघे
कुर्वन्तो जयनिनदानिव प्रहृष्टाः ॥ ४४ ॥

अत्र मत्तभृङ्गा मुकुलेषु रेजुरित्यन्वये मुकुलेष्वित्यत्र पूर्वं मालतीनामिति हीनपदद्धेतो-[5]र्न्यूनपददोषः ।

रघुवंशे [ २.८ ]–

लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम् ।
रक्षापदेशान्मुनिहोमधेनोर्वन्यान् विनेष्यन्निव दुष्टसत्त्वान् ॥ ४५ ॥

अत्र केशैरुपलक्ष्यमाण इत्यन्यपदनिक्षेपान्न्यूनपददोषः[6] ।

१ पीडयेत्. २ पर्यटन् श॰. ३ मासादयन्नतु. ४ विच्छेदा॰ ५ द्धेतोर्न्यून॰ ६ दोषः.

§ ११. ) एकार्थं यथा –

पठनं पठितानां च शब्दार्थानां पुनः पुनः ।
अविशेषेण भणनं तदेकार्थं मतं यथा ॥ ४६ ॥

मेघा वर्षासु गर्जन्ति गर्जन्ति जलदास्तथा ।
गर्जन्ति वारिवाहास्ते गर्जन्ति च बलाहकाः ॥ ४७ ॥

अन्यच्च, रघुवंशे [ २.१२ ] –

स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः ॥ ४८ ॥

अत्र वनदेवताभिः कीचकैरुद्गीयमानं यशः शुश्रावेत्यन्वये, वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धता इति [ अमरकोषे २. ४. १६२ ] कीचकपदेनैव वाक्ये[1] चरितार्थे सति मारुतपूर्णरन्ध्रैस्तथा च कूजद्भिरिति पुनः पुनरविशेषेण विशेषणद्वयोपादानत्वादेकार्थदोषः ।

तथा च [ रघुवंशे ३.१७ ] –

निवातपद्मस्तिमितेन चक्षुषा
नृपस्य कान्तं पिबतः सुताननम् ।
महोदधेः पूर इवेन्दुदर्शना-
द्गुरुः प्रहर्षः प्रबभूव[2] चात्मनि ॥ ४९ ॥

अत्रात्मनि गुरुः प्रहर्षः प्रबभूवेति व्याहृते सति हर्षः प्रबभूवेति वाक्यार्थपरिपूर्तौ पुनः पुनरविशेषेण गुरूपसर्गविशेषणद्वयोपादानहेतोरेकार्थदोषः ।

§ १२. ) व्यर्थं यथा –

एकवाक्ये प्रबन्धे वा पूर्वात् पूर्वात् पराहतम् ।
विरुद्धार्थतया व्यर्थं वाक्यं वाक्यविदो यथा ॥ ५० ॥
निर्जिता रिपवो येन जितं येन महीतलम् ।
को दधेत् समरे खड्गं को वीरो रणमिच्छति[3] ॥ ५१ ॥

अन्यच्च, मयूरकवेः काव्यमण्डने –

सर्पिः शत्रुयशो हवी रिपुगणास्तीक्ष्णाः[4] शरा बर्हिषः
खड्गाश्चारुस्रुचः[5] प्रतापदहनः प्रत्यर्थिमुख्यः पशुः ।
सेनेशाः कुशलर्त्विजः क्षितिपते श्रीवीरसेन प्रभो
होतृत्वं परिकल्प्य सङ्गरमखे देवास्त्वया तर्पिताः ॥ ५२ ॥

---

१ वाक्यचरितार्थे. २ प्रबभुव. ३ °मिछति. ४ तीक्ष्णः. ५ स्रुचः.

अत्र पूर्वात् पूर्वात् पराहतार्थसम्बन्धात् पशुवधे शस्त्रवैयर्थ्यादत एव पराक्रमहीनत्वाच्च व्यर्थदोषः । माघे [ शिशुपालवधे १.३ ] चयस्त्विषामिति [ ॥ ५३ ॥ ] । अत्र पूर्वात् पूर्वात् पराहतसम्बन्धाद् व्यर्थदोषः ॥

§ १३. ) रीतिभ्रष्टं यथा—

समासा चासमासा च गौडी वैदर्भिका क्रमात् ।
एकपद्ये द्वयं यत्र रीतिभ्रष्टं बुधा विदुः ॥ ५४ ॥

प्रतापराजद्वसुधाधिनाथकिरीटसंघृष्टपदारविन्दः ।
शशास रामो वसुधां समग्रां चिरन्तनो दाशरथिः प्रतापात् ॥ ५५ ॥

अन्यच्च, कुमारसम्भवे [ ६.४६ ]–

सन्तानकतरुच्छायासुप्तविद्याधराध्वगम् ।
यस्य चोपवनं बाह्यं गन्धवद्गन्धमादनम् ॥ ५६ ॥

रघुवंशे [ १०.६० ]–

गुप्तं ददृशुरात्मानं सर्वाः स्वप्नेषु वामनैः ।
जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्तिभिः ॥ ५७ ॥

तथा च [ रघुवंशे ४.७७ ]–

तत्र जन्यं रघोर्घोरं पार्वतीयैर्गणैरभूत् ।
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥ ५८ ॥

अत्र पूर्वार्धे पदैकत्वादुत्तरार्धे भिन्नपदत्वात्, क्वचित्पूर्वार्धे भिन्नपदत्वादुत्तरार्धे पदैकत्वाच्च गौडीवैदर्भ्यव्यभिचारेण रीतिपरिभ्रष्टदोषः ।

§ १४. ) अवस्थाविरोधि यथा –

वर्ण्यावस्थाविहीनं यत्तदवस्थाविरोधि च ।
कलभा नर्मदातोये क्रीडन्ति मददर्पिताः ॥ ५९ ॥

अन्यच्च, रघुवंशे [ २.१० ]–

मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम् ।
अवाकिरन् बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥ ६० ॥

अत्र बाललताः प्रसूनैस्तमवाकिरन्नित्यत्र बाल्यावस्थायां कुसुमाभावादवस्थाविरुद्धदोषः ।

---

१ समासा समासा च. २ तरु छाया. ३ पार्वतियैर्गणैः. ४ The sentence अत्र बाललताः··· दोषः is misplaced in the Ms. It is found written after मुग्धात्वहेतोरवस्थाविरोधिदोषः । below.

मदनकवेः शृङ्गारकौमुद्याम् –

कुचकोरकगुप्तिसादरा नववोढा न पतिं तिरश्चकार ।
भयमीलितलोचना भृशं करपङ्केरुहवद्ध–⏑––॥ ६१ ॥

अत्र कुचकोरकगुप्तिसादरेति वर्णने, नवोढायाः कुचवर्णनं न संभवति । उक्तं च रसमञ्जर्यां [ श्लोकः ८ ] दरमुकुलितेति [॥ ६२॥] ।

अत्र करकलितकुचस्थलं न तु कुचाविति निदर्शनान्नवोढायाः कुचयोरभावे प्राप्ते [ रसमञ्जर्यां ७ मे पृष्ठे ] 'तत्राङ्कुरितयौवना मुग्धा', इति लक्षणादत्र मुग्धात्वहेतोरवस्था-विरोधिदोषः ।

§१५.) द्रव्यभेदकं यथा –

विरोधिता भवेद्यत्र द्रव्याणां शिशिरादिनाम् ।
द्रव्यभेदं प्रशंसन्ति दोषं दोषविदो यथा ॥ ६३ ॥
दिवाकरकराः शीताः शरच्चन्द्रकरा इव ।
रवेरिव विराजन्ते घर्माश्च शशिकान्तयः ॥ ६४ ॥

अन्यच्च, वराहमिहिरस्य शृङ्गारतरङ्गिण्याम् –

पीयूषं पपुरुपले च चन्द्रकान्ते
निक्षिप्तं विधुकिरणैर्भृशं चकोराः ।
प्रेम्णा ते चपलतया च पात्रकल्पे
घर्मांशोस्तरुणकरैर्घनीकृतं च ॥ ६५ ॥

अत्र चकोरा घर्मांशोस्तरुणकरैर्घनीकृतममृतं पपुरित्यन्वये तरुणकिरणैरित्युच्यमाने शीतोष्णद्रव्ययोर्युगपत्प्राप्तेरभावाद्रव्यभेददोषः ।

§१६.) देशविरोधि यथा –

यस्मिन् देशे विरुद्धं यद्वर्णनं क्रियते च तत् ।
अलङ्कारविदा तत्र प्रोक्तं देशविरोधिकम् ॥ ६६ ॥
वहन्ति निम्नगा नित्यं प्रवाहैश्च मरुस्थले ।
मदोत्कटा गजा भान्ति मलयाद्रौ निरन्तरम् ॥ ६७ ॥

अन्यच्च धनञ्जयस्य कामप्रदीपे –

घनतरनवविन्ध्यकाननाली-
कुसुममरुद्गतिखिन्नकिन्नरीणाम् ।
श्रममहरदयन् विलासिनीनां
सुललितचन्दनपल्लवेषु भिन्नः ॥ ६८ ॥

---

१ The Ms. shows a lacuna here; space for four syllables is left blank. २ अत्र चकोरक°.

अत्र सुललितचन्दनपल्लवेषु मिश्रो मरुदित्युक्ते विन्ध्याद्रौ चन्दना न वर्णनीया मलयाद्रावेवेत्युक्तं च –

काम्बोजे वाजिनश्चैव विन्ध्याद्रौ दन्तिनस्तथा ।
भूर्जत्वचो हिमाद्रौ च चन्दनं मलये गिरौ[1] ॥ ६९ ॥

इति कविरूढनियमपरावृत्त्या देशविरुद्धदोषः ।

§१७.) कलाविरुद्धं यथा–

चतुःषष्टिकलास्वित्थं विरोधो वर्ण्यते यदा ।
कलाविरोधि तज्ज्ञेयं वर्जितं रससङ्ग्रहे ॥ ७० ॥
वीरशृङ्गारयोर्भावौ स्थायिनौ क्रोधविस्मयौ ।
करुणाहास्ययोश्चैव रतिर्भीती स्मृतौ यथा ॥ ७१ ॥

अन्यच्च, रसमञ्जर्यां [ श्लोकः ३ ]–

गतागतकुतूहलं नयनयोरपाङ्गावधि
स्मितं कुलनतभ्रुवामधर एव विश्राम्यति ।
वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः
कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥ ७२ ॥

अत्र कुलनतभ्रुवां वचः प्रियतमश्रुतेरतिथिरेव जायतेऽत्र तमब्ग्रहणेनैको न्यूनस्नेहोऽन्योऽधिकस्नेहः कान्त इति प्राप्तौ परकीयात्वहेतोः कलाविरुद्धदोषः ।

§१८.) न्यायविरुद्धं यथा –

नीत्या विरोधि यद्वाक्यं तत् तु न्यायविरोधि च ।
विवेकन्यायसंपन्नः पितरं हन्ति चात्मजः ॥ ७३ ॥

अन्यच्च, प्रबोधचन्द्रोदये [ २.९ ]–

नास्माकं जननी तथोज्ज्वलकुला सच्छ्रोत्रियाणां पुन-
र्व्यूढा काचन कन्यका खलु मया तेनास्मि ताताधिकः ।
अस्मच्छ्यालकमित्रमातुलसुता मिथ्याभिशप्ता तत-
स्तत्सम्बन्धवशान्मया स्वगृहिणी प्रेयस्यपि प्रोज्झिता ॥ ७४ ॥

अत्रास्माकं जननी उज्वलकुला न, मया पुनः श्रोत्रियाणां कन्यका ऊढेति हेतोरहं ताताधिक इति व्याहृते तर्हि उक्तं च हेमाद्रौ [ ]–

मातृपितृसमं भूमौ दैवतं नैव विद्यते ।
सेवने तस्य पूज्यस्य कल्पान्तोऽपि कलायते ॥ ७५ ॥

---

१ °गिराविति कविरूढ°. २ अस्मत् शालक°. ३ प्रोज्झिता. ४ पुनः च्छ्रोत्रियाणां. ५ तताधिक.

तथा च–

पतितोऽपि पिता त्याज्यो माता नैव कदाचन ।
गर्भधारणपोषाभ्यां तेन माता गरीयसी[1] ॥ ७६ ॥

इति धर्मनीतिपरावृत्त्या न्यायविरुद्धदोषः ।

§ १५.) कालविरुद्धं यथा–

यत्र कालोचितं वर्ण्यवर्णनं न भवेद्यदि ।
वदन्ति विबुधास्तत्र तत्तत्कालविरोधि च ॥ ७७ ॥
शिशिरे कोकिलारावो हेमन्ते शिखिनां स्वनः ।
वर्षासु कलहंसाश्च वसन्ते मालती यथा ॥ ७८ ॥

अन्यच्च, धनञ्जयकवेः शृङ्गारमञ्जर्याम्–

ललिततरनिकुञ्जकेकिनादो
विलसति शारदचन्द्ररश्मिजाले ।
सपदि समहरत् स सूर्यवध्वाः
कलुषितचित्तमहो हि मानिनीनाम् ॥ ७९ ॥

अत्र केकिनादः शारदचन्द्ररश्मिजाले विलसति सति मानिनीनां कलुषितचित्तं समहरदित्यन्वये शरद्वर्णने केकिनो न वर्णनीयाः ।

उक्तं च–

सप्तच्छेदतरुर्हंसाः पटुत्वं सूर्यचन्द्रयोः ।
जलाच्छता[3] श्वेतघना मयूराणां मदात्ययः ॥ ८० ॥

एते पदार्थाः शरदि वर्णनीया इत्युक्ते मयूराणां मदात्यये सति कुतो नादप्रसङ्ग इति हेतोः कालविरुद्धदोषः ।

रघुवंशे [ ५.१ ]–तमध्वरेति ॥ ८१ ॥

अत्र विश्वजिति अध्वरे निःशेषविश्राणितकोषजातमित्यत्र विश्वं जितवान् यस्मिन्नसौ विश्वजित् तस्मिन्नध्वरे निःशेषं विश्राणितं कोशजातं येन तमिति व्याख्यायां तर्हि जयविश्राणनयोरेककालाभावात् कालविरुद्धदोषः ।

§ १६.) हेतुविरुद्धं यथा–

हेतुर्व्यस्ततयाभावाज्ज्ञेयं[4] हेतुविरोधि च ।
जगाम तरसा पत्नी वाहिनीं प्रति शात्रवीम् ॥ ८२ ॥

---

१ गरीयसीति. २ सप्तछद°. ३ जलाछता. ४ °श्ज्ञेयं.

अन्यच्च, रघुवंशे [ ३.८ ]–

दिनेषु गच्छत्सु नितान्तपीवरं
तदीयमानीलमुखं स्तनद्वयम् ।
तिरश्चकार भ्रमराबलीढयोः
सुजातयोः पङ्कजकोशयोः श्रियम् ॥ ८३ ॥

अत्र तदीयं स्तनद्वयं पङ्कजकोशयोः श्रियं तिरश्चकारेत्यन्वये तर्हि पङ्कजकारणं कोशः सम्भवति न तु कोशकारणं पङ्कजं चेद्विकासादनन्तरं कोशोत्पत्तिस्तर्हि पर्युषिते भ्रमरा न सम्भवन्तीति हेतुवैपरीत्याद्धेतुविरोधिदोषः ।

तथा च [ रघुवंशे ५.७२ ] –

शय्यां जहत्युभयपक्षविनीतनिद्रा
स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ।
येषां विभान्ति तरुणारुणरागयोगा-
द्भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥ ८४ ॥

अत्र मुखरशृङ्खलकर्षिणस्ते स्तम्बेरमाः शय्यां जहतीत्यन्वये मुखरशृङ्खलकर्षिण इत्यत्र कर्मधारयसमासे कृते मुखरत्वकारणं कर्षणं न तु केवलशृङ्खले मुखरत्वमिति हेतुव्यस्तत्वा-द्धेतुविरोधिदोषः ।

§ १७. ) खण्डितं यथा –

अन्यवाक्यप्रवेशेन यद्व्यस्तं खण्डितं यथा ।
जनार्दनः शिवं दद्याद्भ्राता यस्य हलायुधः ॥ ८५ ॥

अन्यच्च, किरातार्जुनीये [ ५.३९ ] –

उत्फुल्लस्थलनलिनीवनादमुष्मा-
दुद्धूतः सरसिजसम्भवः परागः ।
वात्याभिर्वियति विवर्तितः समन्ता-
दाधत्ते कनकमयातपत्रलक्ष्मीम् ॥ ८६ ॥

अत्र सरसिजसम्भवः परागः कनकमयातपत्रलक्ष्मीमाधत्त इत्यन्वये सति कीदृशः परागोऽमुष्मात् स्थलनलिनीवनादुद्धूत इत्यन्यवाक्यप्रवेशेन विच्छिन्नत्वात् खण्डितदोषः ।

रघुवंशे [ ४.२१ ]—

प्रससादोदयादम्भः कुम्भयोनेर्महौजसः ।
रघोः परिभवाशङ्कि चुक्षुभे द्विषतां मनः ॥ ८७ ॥

अत्रैकप्रबन्धे कुम्भयोनेरुदयादम्भः प्रससादेत्यन्वये सति रघोः परिभवाशङ्कि द्विषतां मनश्चुक्षुभे इत्यन्यवाक्यप्रवेशेन विच्छिन्नत्वात् खण्डितदोषः ।

१ गच्छत्सु. २ यद्यस्तं. ३ रघो परि°. ४ मनश्चुक्षुभ. ५ विछिन्नत्वात्खं°.

§१८.) अधिपदं यथा—

चरितार्थे प्रयुक्तं यत् पदं चाधिपदं मतम् ।
यथा सा नः शिवं दद्यात् पार्वती पतिकामिनी ॥ ८८ ॥

अन्यच्च, किरातार्जुनीये [ १६.८ ]—

रथाङ्गसङ्क्रीडितमश्वहेषा
बृंहन्ति मत्तद्विपबृंहितानि ।
सङ्घर्षयोगादिव मूर्च्छितानि
ह्रादं निगृह्णन्ति न दुन्दुभीनाम् ॥ ८९ ॥

अत्र सङ्घर्षयोगान्मूर्च्छितानि रथाङ्गसङ्क्रीडिताश्वहेषामत्तद्विपबृंहितानि श्रुत्वा दुन्दुभीनां ह्रादं न निगृह्णन्ति योद्धार इति शेष इत्यन्वयेऽश्वमत्तद्विपयोर्वैयर्थ्यम् ।

उक्तं च कविकल्पलतायां—

सिञ्जितं भूषणारावे गजानां बृंहितं मतम् ।
गुञ्जारवो मिलिन्दानां हेषा हेषा च वाजिनाम् ॥ ९० ॥

इति कविरूढनियमात् पदद्वयस्य व्यर्थतया इव-शब्दस्यापि प्रयोजनहीनत्वादधिपददोषः

रघुवंशे [ ६.२२ ]—

कामं नृपाः सन्ति सहस्रशोऽन्ये
राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसङ्कुलापि
ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ ९१ ॥

अत्र रात्रिर्नक्षत्रताराग्रहसङ्कुलापि चन्द्रमसैव ज्योतिष्मतीव वर्तत इत्यन्वये नक्षत्राणि च ताराश्च ग्रहाश्चेत्युपादाने तारा-शब्दस्य वैयर्थ्यादधिपददोषः ।

अन्यच्च, शिरोमणिव्याख्यायां [ श्लोकः २ ] शिरोमणिभट्टाचार्यः—

अध्ययनभावनाभ्यां सारं निर्णीय सकलतन्त्राणाम् ।
*दीधितिमथ चिन्तामणि तनुते तार्किकशिरोमणिः श्रीमान् ॥ ९२ ॥*

*अत्र चिन्तामणौ दीधितिव्याख्यां तनुत इत्यन्वये वाक्यचरितार्थत्वात् श्रीमान्-पदस्य* वैयर्थ्यादधिपददोषः ।

अन्यच्च, काव्यप्रकाशकृन्मम्मटः [ १.१ ]—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
[ सद्यः परनिर्वृतये ] कान्तासम्मिततयोपदेशयुजे ॥ ९३ ॥

---

१ मूर्छितानि.　२ ह्रादं.　३ मूर्छितानि.　४ रह्रादं.　५ बृहितं.　६ हषा हेषा च.
७ रात्रिनामिति.　८ पदद्वयोर्व्यर्थ°.　९ सद्यः परनिर्वृतये–these words are omitted in the Ms.

अत्र काव्यं यशस इत्याद्यन्वये कृते शिवेतरक्षतय इत्यत्र इतरक्षति-शब्दवैय्यर्थ्यादधिपददोषः ।

§ १९.) हीनोपमं यथा—

उपमेयेन सादृश्यमुपमानस्य वर्ण्यते ।
परगामित्वहेतोस्तद्वाक्यं हीनोपमं विदुः ॥ ९४ ॥
समुद्रमेखलां पृथ्वीं वशीकर्तुं क्षमं तव ।
सामन्तवन्दनीयाङ्घ्रे राजते भुजपङ्कजम् ॥ ९५ ॥

अन्यच्च, सारङ्ग्याम् [ =विवाहपटले १ मः श्लोकः ] –

सुरासुरैर्वन्दितपादपद्मं शिवात्मजं भक्तजनस्य शंदम् ।
तं विघ्नराजं प्रणतोऽस्मि नित्यं वागीश्वरीं देवगुरुं[1] शिवं च ॥ ९६ ॥

अत्र सुरासुरैर्वन्दितपादपद्मं तं विघ्नराजं प्रणतोऽस्मीत्यन्वये पादपद्ममित्यत्रोपमेयेनोपमानसादृश्यादत एव परगामित्वे सति[2] केवलं पद्मस्यैव नतिरिति व्यज्यत इति हेतोर्हीनोपमदोषः ।

॥ इति वाक्यदोषाः ॥

---

## [ २. अथ पददोषाः । ]

§ १.) स्वसङ्केतप्रक्लृप्तार्थं यथा –

स्वसङ्केतप्रक्लृप्तार्थं स्वज्ञेयं वक्ति यत् पदम् ।
कुभ्रजिन्नीलतेजोभिर्द्योतन्ते[3] शैलभूमयः ॥ ९७ ॥

अन्यच्च, किरातार्जुनीये [ १.४० ] –

अनारतं यौ मणिपीठशायिना-
वरञ्जयद्राजशिरःस्रजां रजः ।
[4]निषीदतस्तौ चरणौ वनेषु ते
मृगद्विजालूनशिखेषु[5] बर्हिषाम् ॥ ९८ ॥

अत्र राजशिरःस्रजां रजो मणिपीठशायिनौ [6]यौ ते चरणावनारतमरञ्जयत् तौ ते चरणाविदानीं मृगद्विजालूनशिखेषु[7] बर्हिषां वनेषु निषीदत इत्यन्वये मणिपीठशायिनावित्यत्र शयाते तौ शायिनाविति शीङ्-धातोरर्थप्रतिपादकत्वे सति कविना स्वसङ्केतप्रक्लृप्ततया स्वार्थं परित्यज्य वर्तमानार्थत्वनिक्षेपात् स्वसङ्केतप्रक्लृप्तार्थदोषः ।

---

१ देवगुरुः. २ सति केवलं. ३ द्योंतते. ४ निषिदतस्तै. ५ °द्विजालुन°. ६ शामिणौ. ७ °द्विजालुन°.

अन्यच्च, माघकाव्ये [ शिशुपालवधे ४.२६ ]–

एकत्र स्फटिकतटांशुभिन्ननीरा
नीलाश्मद्युतिभिदुराम्भसोऽपरत्र ।
कालिन्दीजलजनितश्रियः श्रयन्ते
वैदग्धीमिह सरितः सुरापगायाः ॥ ९९ ॥

अत्र वैदग्धीमित्यत्र कविना स्वसङ्केतप्रकॢप्ततया मुख्यार्थं परित्यज्यान्यच्छोभार्थे पदं परिकल्प्य योजितमिति हेतोः स्वसङ्केतप्रकॢप्तार्थदोषः ।

कङ्कणकवेर्भोपञ्चाशिकायाम् –

सिन्धुसूनुपतेर्मित्रं तस्यायुधपतिश्च यः ।
तस्य कन्यासखीस्वच्छं भाति ते कीर्तिमण्डलम् ॥ १०० ॥

ते कीर्तिमण्डलं भाति; कीदृशं ? सिन्धुसूनुश्चन्द्रस्तत्पतिः शम्भुस्तन्मित्रं विष्णुस्तस्यायुधं पद्मं तत्पतिः सूर्यस्तत्कन्या यमुना तस्याः सखी गङ्गा तद्वत् स्वच्छमित्यत्र कवेः स्वज्ञेयपद-निक्षेपात् स्वसङ्केतप्रकॢप्तार्थदोषः ।

§ २.) अप्रसिद्धं यथा –

प्रसिद्धार्थतया हीनमप्रसिद्धं स्मृतं बुधैः ।
शरच्चन्द्रनिभां गङ्गां जघान मुनिसत्तमः ॥ १०१ ॥

अत्र कठोरशब्दप्रयोगेण कर्णयोर्दुःसहत्वाच्छ्रुतिकटुदोषः ॥

अन्यच्च, कुटुम्बकवेः प्रस्तावप्रबन्धे –

दधाति चन्द्रः किरणैश्चकोरान्
क्षुधार्दितान् हन्ति तमः पयोधेः ।
करोति वृद्धिं जलजप्रकाशं
सतां हि पुंसां प्रकृतिर्हिताय ॥ १०२ ॥

अत्र चन्द्रः किरणैः क्षुधार्दिताश्चकोरान् दधाति पोषणं करोतीति प्रकॢप्तार्थे सति डुधाञ् धारणपोषणयोरयं धातुर्धारणार्थः प्रसिद्धो भवति, तत्परावृत्तिहेतोरप्रसिद्धदोषः ।

§ ३.) अलक्षणं यथा –

विरुद्धं शब्दशास्त्रेण विज्ञेयं तदलक्षणम् ।
सप्तद्वीपां यथा चासौ धरणिमवते नृपः ॥ १०३ ॥

अन्यच्च, किरातार्जुनीये [ ९.८ ]

आकुलश्चलपतत्रिकुलानामारवैरनुदितौषसरागः ।
आययावहरिदश्वविपाण्डुस्तुल्यतां दिनमुखेन दिनान्तः ॥ १०४ ॥

---

१ 'श्रियं. २ °स्वच्छं. ३ °र्दितान् चकोरात्. ४ धारणपोषण°.

अत्रानुदितौषसरागो दिनान्तो दिनमुखेन तुल्यतामाययावित्यन्वयेऽनुदितौषसराग इत्यत्र, कालाट्ठञ् [ पाणिनेः, अष्टाध्याय्यां ४.३.११ ], ठस्येक [ पाणिनेः अष्टाध्याय्यां ७.३.५० ] इत्यण्-निषेधकविशेषसूत्रद्वयस्योपादानादौषसिक इति सिद्धं तत्परावृत्ति-हेतोरलक्षणदोषः ।

किरातार्जुनीये [ १३.५९ ]–

मार्गणैरथ तव प्रयोजनं नाथसे किमु पतिं न भूभृतः ।
त्वद्विधं सुहृदमेत्य सोऽर्थिनं किं न यच्छति विजित्य मेदिनीम् ॥ १०५ ॥

हे धनुर्धर मार्गणैस्तव प्रयोजनं तर्हि त्वद्विधं सुहृदं भूभृतः पतिमेत्य किमु न नाथसे इत्यन्वये नाथसेऽत्र, नाथृ याञ्चोपतापैश्वर्याशीःष्वयं धातुः, [ तस्य ] परस्मैपदधातुगण-पठनात् परस्मैपदमेव सिद्धं तत्परावृत्त्यात्मनेपदप्रयोगादलक्षणदोषः ।

रसमञ्जर्याम् [ श्लोकः १ ]–

आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि
स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया ।
तल्पे किञ्च मृगत्वचा विरचिते निद्राति भागैर्निजै-
रन्तःप्रेमभरालसां प्रियतमामङ्के दधानो हरः ॥ १०६ ॥

अत्र हरः निम्नोन्नतायां भुवि पुरतः आत्मीयं चरणं दधातीत्यन्वये पुरत इत्यत्राग्रवाच-कात्, न तु नगरवाचकात् 'पञ्चम्यास्तसिल्' [ पाणिनेः, अष्टाध्याय्यां ५.३.७ ] इत्यनेन, पुरस्तात् सिद्धत्वात् पुरत इति वक्तुमशक्यत्वादलक्षणदोषः ।

तद्वत् कुमारे [ ५.७० ]–

इयं च तेऽन्या पुरतो विडम्बना
यदूढया वारणराजहार्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥ १०७ ॥

तत्रापि [ कुमारसंभवे ६.८१ ]–

प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् ।
चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभिः ॥ १०८ ॥

अत्र ल्यब्योगे द्वितीयापेक्षायां तत्परावृत्तिहेतोरलक्षणदोषः ।

§४.) अगौरवं यथा–

अर्थगौरवहीनं यत् तदगौरवमुच्यते ।
प्रतापो राजते राजन् दीपवत् ते महीतले ॥ १०९ ॥

१ कालाट्ठञ् ठस्येक इत्यण°. २ यछति. ३ तद्विधं. ४ रञ्जयंतोस्या°. ५ °रलक्षणं दोषः.

अन्यच्च, रघुवंशे [ ३.५५ ] –

हरेः कुमारोऽपि कुमारविक्रमः
सुरद्विपास्फालनकर्कशाङ्गुलौ ।
भुजे शचीपत्रलताक्रियोचिते
स्वनामचिह्नं[1] निचखान सायकम् ॥ ११० ॥

अत्र कुमारोऽपि सुरद्विपास्फालनकर्कशाङ्गुलौ हरेर्भुजे स्वनामचिह्नंसायकं निचखानेत्यन्वये सुरद्विपास्फालनकर्कशाङ्गुलावित्यत्र सुराणां द्विपस्तर्हि सर्वेषां वाहनं[3] सम्भवति, सुरस्य इन्द्रस्य द्विपस्तर्हि प्रकृते[4] हरि-शब्दस्योपादानं वर्तते तर्हि यथाकथञ्चिदर्थगौरवहीनत्वादगौरवदोषः ।

§५.) [5]श्रुतिकटु यथा –

दुःसहं कर्णयोर्यच्च पदं श्रुतिकटु स्मृतम् ।
स्रष्ट्रा[6] विनिर्मिता क्रोष्ट्री गर्हिताचरिता जनैः[7] ॥ १११ ॥

अन्यच्च, लल्लमुहूर्तसारे –

मार्तण्डरश्मिवृन्दाभं वेतण्डकलत्रवक्त्रकम् ।
भर्गडिम्भं तमीडेऽहं[8] विष्टपत्रयभूषणम् ॥ ११२ ॥

अत्र कठोर-शब्दप्रयोगेण कर्णयोर्दुःसहत्वाच्छ्रुतिकटुदोषः ।

[ अन्यच्च ] –

अदभ्राभ्रमुसौहार्दनिगडेन[10] नियन्त्रितः ।
यत्रा द्राग्द्रावितो दन्ती बभूव प्रेमतत्परः[11] ॥ ११३ ॥

अत्र कठोरशब्दप्रयोगेण कर्णयोर्दुःसहत्वाच्छ्रुतिकटुदोषः ।

§६.) पुनरुक्तिर्यथा –

पुनरुक्तिः पदं यत्र चरितार्थे नियोजितम् ।
भाति प्राग्दिशि पूर्णोऽसौ रजनीशो निशापतिः ॥ ११४ ॥

अन्यच्च, रघुवंशे [ १.६४ ] –

त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
सानुबन्धाः कथं न स्युः सम्पदो मे निरापदः ॥ ११५ ॥

अत्र सम्पद इत्युच्यमाने निरापद इति पुनरुक्तत्वहेतोः पुनरुक्तिदोषः ।

भवभूतेः साहित्यरत्नाकरे –

सुदति वद सुवाचं मुञ्च वाचंयमत्वं[12]
प्रणयिनि मयि कोपं किङ्करे किं करोषि ।
यदि बत तव चित्ते सापराधोऽसि बाले
निजभुजयुगवल्ल्या बन्धनं मे विधेहि ॥ ११६ ॥

---

१ °चिन्हं. २ °चिन्ह°. ३ वाहनं न संभवति. ४ प्रकृतौ. ५ श्रुतिकटु. ६ सष्ट्रा. ७ चरिताजनैः. ८ तमिडे. ९ °च्छृति°. १० निगडेम. ११ °तसरः. १२ वाचांयमत्वं.

अत्र हे सुदति सुवाचं वदेत्यन्वये वाक्यार्थपरिपूर्तौ[1] सत्यां पुनर्वाचंयमेत्वं[2] मुञ्चेति पदत्रयपठनात्[3] पुनरुक्तिदोषः ।

§ ७.) असंमतं यथा –

असंमतं यथा सार्थं शास्त्रान्तरविरोधि च ।
राजते भवनं भूप महीरुहमरीचिभिः ॥ ११७ ॥

अन्यच्च, रघुवंशे [ ३.३० ] –

धियः समग्रैः स गुणैरुदारधीः
क्रमाच्चतस्रश्चतुरर्णवोपमाः ।
ततार विद्याः पवनातिपातिभि-
र्दिशो हरिद्भिर्हरितामिवेश्वरः ॥ ११८ ॥

अत्र स रघुः धियः समग्रैर्गुणैः क्रमाच्चतस्रो विद्यास्ततारेत्यन्वये धियो गुणैरित्यत्र बुद्धेरौदार्यधैर्यगाम्भीर्यशौर्यैश्वर्योपमादिभिर्गुणैः कृत्वा विद्यास्ततार इति सार्थं सत् शास्त्रान्तरविरोधमाह । धियः चतुर्विंशतिगुणेष्वन्तर्भावत्वं भवति तर्हि गुणस्य गुण इति वक्तुमशक्यत्वादिति न्यायविरोधस्तस्माच्छास्त्रान्तरविरुद्धत्वादसंमतदोषः ।

§ ८.) व्याहतार्थं यथा –

इष्टार्थं बाधकार्थं यत्प्राप्नोति व्याहतार्थकम् ।
प्रतापेन महीं शास्ति नयेन वसुधाधिपः ॥ ११९ ॥

अन्यच्च, नैषधे [ २.६३ ] –

तव वर्त्मनि वर्ततां शिवं पुनरस्तु त्वरितं समागमः ।
अपि साधय साधयेप्सितं स्मरणीयाः समये वयं वयः ॥ १२० ॥

भो वयस्तव वर्त्मनि शिवं वर्ततामित्यन्वय इतीष्टार्थे सति बाधकार्थमाह, भो वयः शिवं तव वर्त्म निवर्ततामिति बाधकार्थस्पष्टीकरणत्वाद् व्याहतार्थदोषः ।

§ ९.) ग्राम्यं यथा –

यत्र यत्र न युक्तं यत् तत्र ग्राम्यं स्मृतं पदम् ।
रामा कटाक्षबाणेन निजघान प्रियं यथा ॥ १२१ ॥

अन्यच्च, कुवलयानन्दे [ श्लोकः ६ ] –

उपमा यत्र सौदृश्यलक्ष्मीरुल्लसति द्वयोः[4] ।
हंसीव कृष्ण ते कीर्तिः स्वर्गङ्गामवगाहते ॥ १२२ ॥

यत्र द्वयोः सौदृश्यलक्ष्मीरुल्लसति सा उपमा[5] । अत्र सौदृश्यलक्ष्मीः[6] शोभा उल्लसति

---

१ परिपूर्ति सत्यां. २ वाचांयमत्वं. ३ °त्रय पपठनात्. ४-५-६ सादृश्य°.

शोभते तर्हि शोभायाः शोभा इति वक्तुमशक्यत्वाद्वर्तमानाभिकाङ्क्षापरावृत्त्याऽयुक्तपद-निक्षेपाद् ग्राम्यपददोषः ।

अन्यच्च, किरातार्जुनीये [ १.३३ ]–

अवन्ध्यकोपस्य विहर्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन[1] जनस्य जन्तुना
न जातहार्देन च विद्विषा दरः ॥ १२३ ॥

अत्र जन्तु-पदेनामर्षशून्यत्वं समायातमेव तर्हि जातहार्दत्वं विद्विषत्वं तत्र न सम्भव-तीत्ययुक्तपदप्रयोगेण ग्राम्यपददोषः ।

॥ इति पददोषाः ॥

अत्युक्तौ च समस्तायां क्वचिद्दोषो न जायते ।
कार्यान्तरे प्रपन्ने हि विषमप्यमृतायते ॥ १२४ ॥

दोषैरशेषै रहितं समन्ता-
दलङ्क्रियाभङ्गि मनोभिरामम् ।
लोके चिरं तिष्ठति तस्य काव्यं
काव्यज्ञशिक्षाविहितं यदि स्यात् ॥ १२५ ॥

रघुनाथमुखारविन्दतो
विगलत्पद्यलसन्मणिस्रजा ।
इति तद्रचयन्तु सुन्दरं
किल कण्ठाभरणं विपश्चितः ॥ १२६ ॥

इति श्रीकविकौस्तुभे महाकाव्ये[3] कविकुलावतंसमनोहरोपनामककृष्णपण्डितसुनु-
श्रीमद्विकम्भट्टसुतसूरिश्रीमद्रघुनाथपण्डितकृतौ[4]
दूषणकथनं नाम द्वितीयं रत्नम् ।[5]

---

१ °शुन्येन. २ जतहार्देन. ३ काव्य. ४ °पण्डित°. ५ The Ms. bears the following remark about its ownership–

पुस्तकमिदं खाण्डेकरोपनामक–आपाजीपन्तात्मज–रघुनाथनाम्नः स्वत्वं
श्रीमत्पुण्यस्तम्भक्षेत्रे लिखापितम् ॥ श्रीलक्ष्मीवासुदेवार्पणमस्तु ॥

# NOTES

(The Roman figures refer to the numbers of the stanzas. l., line).

**1.** The reading of the Ms. °कृशान्त्समासतः is also correct, according to P. VIII. 3. 32 नश्च (नकारान्तात्सस्य धुट्। सन्त्सः सन्सः। सिद्धान्तकौमुदी). But as such forms with त् inserted between the final न् and the initial स् are not generally found in printed texts, the more usual form is adopted in this text also. **समासतः**, in brief. **शल्यरूपान्**, which are of the nature of darts, i. e. which come in the way of full appreciation and enjoyment of poetical compositions (काव्यप्रबन्ध). **पूर्वाचार्यैः प्रदर्शितान् दोषान्**, though the author says here that he will state and illustrate the काव्यदोषs which are already pointed out by earlier writers in the field, it does not appear that he is indebted to any one author in particular, though he imitates the wording of some in framing the definitions of a few दोषs. For the most part, his treatment is independent as regards the definitions and the selection of illustrative stanzas.

**2–4.** These three *Kārikās* enumerate the 23 वाक्यदोषs or the flaws which characterise a sentence as a whole. **छन्दोभ्रष्टम्** etc., these words are adjectives qualifying वाक्यं understood. **श्लिष्टागमविरोधि**, (श्लिष्टं च आगमविरोधि च) this expression denotes two faults श्लिष्ट and आगमविरोधि and as such the compound should have been an इतरेतरद्वन्द्व (*i. e.* श्लिष्टागमरोधिनी). But by relying on the option allowed by the rule सर्वो द्वन्द्वः विभाषयैकवद्भवति (परिभाषेन्दुशेखर, ३४) which is in neuter gender by स नपुंसकम् (पा. २. ४. १७) श्लिष्टागमविरोधि is used *metra causa*. **रीतिपरिभ्रष्टं** = रीतिभ्रष्टं is stz. 54 below. **अवस्थाद्रव्यभेदकम्**, अवस्थाभेदकं द्रव्यभेदकं च. अवस्थाभेदकं = अवस्थाविरोधि in stz. 59 below. For the compound अवस्थाद्रव्यभेदकं see note on श्लिष्टागमविरोधि above. **देशकला** etc., in this expression five flaws are enumerated: देशविरोधिकम्, कलाविरोधिकम्, न्यायविरोधिकम्, कालविरोधिकम् and हेतुविरोधिकम्. विरोधिकम् occurring at the end of the द्वन्द्व compound देश-कला-न्याय-काल-हेतवः being construed with each member of the compound by the rule द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं सम्बध्यते. **खण्डिताधिपदे**, खण्डितं च अधिपदं च.

**5–6.** The nine flaws which characterise a particular word (पद) only in a sentence are listed in the *Kārikās* 5b and 6. **स्वसङ्केतप्रक्लृप्तार्थं** etc., here also these words with the exception of पुनरुक्तिः are adjectives qualifying पदं understood. It would have been better if we had पुनरुक्तं in uniformity with other eight words instead of पुनरुक्तिः (noun) primarily meaning 'repetition' and then by लक्षणा, a flaw in a word characterised by repetition. For this list of पददोषs, रघुनाथ seems to be indebted to वाग्भटालङ्कार 2. 6–7a viz.

अनर्थकं श्रुतिकटु व्याहतार्थमलक्षणम्।
स्वसङ्केतप्रक्लृप्तार्थमप्रसिद्धमसंमतम्॥
ग्राम्यं यच्च प्रजायेत पदं तन्न प्रयुज्यते।

Here वाग्भट has mentioned 8 पददोषs. But our author omits अनर्थक and adds two more—अगौरव and पुनरुक्ति.

**6. 1. 2** Symmetry requires that we should have here छन्दोभ्रष्टं यथा either in place of छन्दो...यथा or after it. Construe—यद्वृत्तं [अन्यवृत्तकृतेन] भेदेन हीनं (दूषितं) तत् छन्दोभ्रष्टं स्मृतम्. The वाक्यदोष छन्दोभ्रष्ट occurs in a sentence (expressed in the form of a stanza) only when one of its quarters is in a metre different from that of the rest in point of the number of syllables, or when there is great difference in their गण–scheme, even though the number of the syllables is the same. For a mixture of two जातिs having the same number of syllables and the same caesura (यति) is allowed and is called by the name of उपजाति. Cf. इत्थं किलान्यास्वपि मिश्रितासु । स्मरन्ति जातिष्विदमेव [i. e. उपजाति] नाम । अन्यास्वपि जगत्यादिजातिष्वित्थं सामान्यसङ्ख्याक्षरत्वसमानयतिकत्वादिप्रकारेण मिश्रितास्विदमेवोपजातिनाम वृद्धाः स्मरन्ति । ग्रन्थान्तरेभ्यो ज्ञात्वा वदन्तीत्यर्थः इत्थमित्यनेन विषमवर्णसङ्ख्यानां विषमयतिकानां च जातीनां व्यादीनां च मिश्रणे उपजातिर्नाम नास्तीति सूचितम् । स्मरन्तीत्यनेन च कविप्रयोगे दर्शनानुरोधः सूचितः । वृत्तरत्नाकर ३.३१ and भट्टनारायण's टीका on the same.

Now, in the illustration, नवजलधर etc. there is छन्दोभ्रष्टदोष as the गण-scheme of नवजलधरनिभो is न, न. ल, ग while of राजते नन्दनन्दनः is र, र, ल, ग, and thus, though the number of syllables is the same, there is great difference in the गण scheme of the two quarters.

**7. I. 1.** धावुककवेः. Neither धावुक nor his work काव्यशेखर is mentioned in the CC. For the juxtaposition of धावुक and काव्यशेखर see introduction p....... The काव्यशेखर of केशव (KSS. 56) does not contain this stanza or the name of धावुक.

संयुग, fight, battle, war. अवकेशिन्, a barren, fruitless tree. सूनं [usually प्रसूनं] flower. The stanza seems to be a challange to his rival in battle by a warrior. Tr.—This your effort in war produced by your valour will not bear fruit like the blooming flower of a barren tree, for the acquisition of enjoyment (by you) while I (your rival) am superior to you and more powerful than you due to (my) prowess.

Here, the first, second and fourth quarters contain 12 syllables and are in वंशस्थ (जतौ तु वंशस्थमुदीरितं जरौ, वृत्तरत्नाकर 3. 46) while the third contains only 11 syllables and is in उपेन्द्रवज्रा (उपेन्द्रवज्रा जतजास्ततो गौ—वृत्तरत्नाकर, 3. 29) hence the fault छन्दोभ्रष्ट.

**8. I. 1.** For छन्दोरत्नावली, see Introduction.

**9.** For the implication of महीपते see Introduction.

अनल्पधीषणाः, highly intelligent (persons). धिषणा is the usual form of the word. धीषणा is not recorded by MW.

**10.** As the words °मुपेन्द्ररष्पुपुना गीता make no sense they have been emended to °मुपेन्द्रवज्रां नृप तां गिरन्ति. नृप and गिरन्ति are used in this emendation as these very words occur in the definitions of वंशस्थ and इन्द्रवंशा in stzs. 9 and 12 respectively.

**10. I. 1.** वंशस्थे...छन्दोभ्रष्टदोषः, these words explain how the छन्दोभ्रष्टदोष occurs in stz. 8 above.

**10. I. 2.** सुश्रुते, I have not been able to trace this stz. in the सुश्रुतसंहिता. But I have traced it with minor variations, in four other medical treatises viz. (1) हेमाद्रि's आयुर्वेदरसायन, a com. on the अष्टाङ्गहृदय (N. S. edn. p. 629 where

it is quoted as from वङ्गसेने तृष्णाधिकारे); (2) the चिकित्सासारसंग्रह of वङ्गसेन (B. O. R. Institute Ms. no. 535 of 1892-1895, fol. 34a. चिकित्सामहार्णव and चिकित्सातत्त्वसङ्ग्रह are the alternate titles of this work). Here it occurs as the last stanza in सामान्यविधि which is a part of the तृष्णानिदानचिकित्साधिकार. Hence it is evident that हेमाद्रि's वङ्गसेने तृष्णाधिकारे is a reference to this very work. (3) योगशत (author not known. B. O. R. I. Ms. no. 1073 of 1886-1892, fol. 5a); (4) योगरत्नाकर (AnSS vol. 4, p. 243).

**11.** But none of these four works, in spite of other variations, read विदध्यात् in the second line. As given in our text the second line contains only 11 syllables in उपेन्द्रवज्रा metre, whereas the remaining three lines contain 12 syllables, the first and the second line are in वंशस्थ, and the fourth in इन्द्रवंशा. Now there occurs here the छन्दोभ्रष्टदोष because of the unequal combination of three lines ($a, c, d$) in 12 syllables and one of 11 syllables ($b$). as shown under 7 above. But our author does not notice the discrepancy in the second line (perhaps he might have read प्रकल्पयेत् as in the चिकित्सासारसंग्रह, हेमाद्रि's com. and योगशत, and विदध्यात् is to be attributed to a scrible error), and picks the fault of छन्दोभ्रष्ट as there is a mixture of वंशस्थ ($a, c$) and इन्द्रवंशा ($d$). This however, is not reasonable. For, a combination of two metres having the same number of syllables and differing but slightly from each other is allowed in books on Prosody. cf. the वृत्तरत्नाकर quoted in notes on stz. 7 above. In fact, वैद्यनाथशास्त्री in his विषमस्थलटिप्पन on the वृत्तरत्नाकर KSS. p. 79, cites the stz. ततः कुधा etc. as an instance of उपजाति arising out of the mixture वंशस्थ and इन्द्रवंशा, the first three lines of which are in वंशस्थ and the last in इन्द्रवंशा.

**12.** एकादशावन्त्यमकं, एकादशादि च अन्त्यमकं च i. e. 10th and 12th syllables. The वृत्तरत्नाकर 3.47 thus defines the इन्द्रवंशा — स्यादिन्द्रवंशा ततजै रसंयुतैः (KSS. 55, p. 78). फणिभाषितं, declared by फणिन् i. e. पिङ्गल, "the supposed author of the Chandas or Treatise on Metre regarded as one of the Vedāṅgas, identified by some with Patañjali, the author of the Mahābhāṣya". MW. p. 625. In the वृत्तरत्नाकर of भट्टकेदार also पिङ्गल is referred to as नागराज or पिङ्गलनाग (वृत्तरत्नाकर, KSS. 55, pp. 29, 30).

**13.** The complete stz. runs as follows :—

**तपेन वर्षाः शरदा हिमागमो वसन्तलक्ष्म्या शिशिरः समेत्य च ।**
**प्रसूनक्लृप्तिं दधतः सदर्तवः पुरेऽस्य वास्तव्यकुटुम्बितां ययुः ॥**

This stz. is in वंशस्थ metre. But strangely enough our author looks upon this as an instance of छन्दोभ्रष्टदोष, for according to him in the third line the गण-scheme would not be ज त ज र as required in वंशस्थ, but य त ज र as न in प्रसून precedes a conjunct consonant viz. क्लृ. But ऌ being a vowel क्लृ cannot be called a conjunct (संयोग, हलोऽनन्तराः संयोगः — पा. १. १.७). Perhaps here the author wants to display his minute knowledge of grammar; for acc. to पा. ८. २.१८ कृपो रो लः there is a portion of ल् in क्लृप् and as stated in the *Mahābhāṣya* वर्णैकदेशग्रहणे वर्णग्रहणम्, क्लृ in क्लृप्तिं may be looked upon as a conjunct made up of क् and ल्, and as such making the preceding न prosodically long.

**13, 13.** संयोगाद्यगुरुत्वात्, (संयोगाद्यस्य गुरुत्वात्) as a syllable preceding a conjunct (संयोग) becomes metrically long. Acc. to संयोगे गुरु (संयोगे परे ह्रस्वं गुरुसंज्ञं

स्यात् ) पा. १. ४. ११. Cf. संयोगपूर्वे च गुरुसंज्ञा प्रकीर्तिता — सुवृत्ततिलक (stz. 6) of क्षेमेन्द्र ( KSS, 55. p. 246 ) जगणे यगणप्राप्तिहेतोः, because the letter प्रसन्न which comes under ज-गण (⏑–⏑) would fall under य-गण (⏑ – – ) due to न being followed by a conjunct ( viz. क्ल ).

**14.** क्रियाव्यस्त, a sentence in which the verb is not expressed, e. g. in शम्भुं सदानन्दं मनसा [ ध्यायामि ] नवैः कुसुमैः [ अर्चयामि ] the verbs ध्यायामि and अर्चयामि or their equivalents are not expressed. As a verb is the most important part of a sentence, naturally the omission of the verb is looked upon as a defect. A वाक्य is thus defined :—आख्यातं साव्ययकारकविशेषणं वाक्यम् — कुमारस्वामी on प्रतापरुद्रीय 5. 20. This is the same as अशरीरं of प्रतापरुद्रीय ( BSS. 10 p. 309 ) which is क्रियापदेन रहितमशरीरं प्रकीर्त्यते. Another name for this दोष acc. to प्रतापरुद्रीय is अनन्वय- एतदेवानन्वयाख्यं दूषणम् ।.

**15.** As the verb अस्ति or वर्तते is to be understood in this stz. our author picks the fault क्रियाव्यस्त in it. But it may be remarked that many verses would be found to contain this fault, if the omission of अस्ति is a fault at all. For, the maxim अस्तिर्भवन्तीपरः अप्रयुज्यमानोप्यस्ति allows the omission of अस्ति, and it would be over-fastidiousness to insist on the actual expression of अस्ति in a sentence. It would be a real क्रियाव्यस्त दोष if any other verb, the omission of which makes the sentence unintelligible is not expressed as in शम्भुं सदानन्दं etc.

उद्बद्धकेशश्च्युतपत्रलेखः, उद्बद्धकेशश्च असौ च्युतपत्रलेखश्च. Nandargikar's edn. of 1897, reads उद्बद्धकेशश्च्युतपत्रलेखः, and फलपत्रवेष्टः for फलजालशोभः. In view of the reading जालशोभः of some MSS., noticed by Nandargikar, here also we might read जालशोभः to improve the sense ( मुक्ताफलजाल, an ornament of pearls—MW ).

**15, l. 1.** **मुहूर्तचिन्तामणि** was written by रामभट्ट or दैवज्ञरामाचार्य at Benares in 1600 A. D. It is published as Vol. 10 in the Harikṛṣṇa-nibandha-maṇi-mālā, Benares, 1923.

**16.** सुवेधमाः of the MS. in the first half has been corrected to व्रतेऽधमाः by reference to the printed text of the मुहूर्तचिन्तामणि. भवन्ति or सन्ति is absent, hence the क्रियाव्यस्तदोष.

**17.** This is one of the stzs. describing the Himālayas to which Arjuna had gone for practising penance. कुररी, a female osprey. कमलं, water. वरणावरणाः, वरणानां ( trees ) आवरणं यासां ताः. नलदं = उशीरं, a fragrant root. सिन्धवः, rivers. Here भवन्ति is to be understood, hence the fault क्रियाभ्रष्ट. अनलदाः-अनलं सन्तापं द्यन्ति खण्डयन्ति शमयन्ति इति अनलदाः ।

**18.** This is the celebrated stanza from the काव्यप्रकाश, in which मम्मट enumerates the several purposes for which poets write poetry. Herein our author notices the क्रियाव्यस्तदोष as भवति or जायते is to be supplied. It is noteworthy that according to our author this stanza contains two more flaws viz. the क्लिष्टदोष and the अविमृष्टदोष for which see stzs. 35 and 93 below !

**19.** This stz. is spoken by कृष्ण to उद्धव and बलराम. भवद्गिरा...नाय, to give scope to your speeches; to serve as an introduction to your words. पूर्वरङ्ग, the preliminaries of the drama; it was an elaborate religious ceremony consisting of 22 items, नान्दी being one of them. Cf. यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥ S. D. 4. 22. प्रसङ्गाय for introducing. नाटकीयं वस्तु,

the plot of the play. In this stz. उच्यन्ते is to be supplied in the first half and जायते in the second. Hence the क्रियाभ्रष्टदोष.

**19, l. 1.** छन्दःसु in metres i. e. stanzas. अर्थ…हीनत्वात्—This clause is obscure in meaning. It may be thus explained—अर्थरूपं यत् लक्ष्यं तद् अर्थलक्ष्यं. अर्थलक्ष्यस्य गोचरत्वं आश्रयत्वेन विषयत्वं तेन हीनत्वात्. A sentence (वाक्य) is the support of the meaning (आश्रयत्वेन विषयत्वं) and it is the लक्षक, the indicator of the meaning, and the sense is the लक्ष्य or is indicated by the वाक्य. Now a verb is the principal part of a sentence. Cf. आख्यातं (verb) साव्ययकारकविशेषणं वाक्यं (for ref. see 14 above). As the verb is omitted in these verses, they are said to be characterised by the क्रियाभ्रष्टदोष.

**20.** क्रमहीनदोष arises when there is a lack of the natural or proper order in mentioning things. कश्चिद्भुक्त्वा etc. Here the correct order of discription is–bath, worship of deities, bowing down to preceptors or elders and taking food. But this is violated in कश्चिद्भुक्त्वा…गुरु and therefore arises the क्रमहीन fault. This stz. is closely similar to वाग्भटालङ्कार 2.22 – अपक्रमं भवेद्यत्र प्रसिद्धक्रमलङ्घनम् । यथा भुक्त्वा कृतस्नानो गुरून्देवांश्च वन्दते ॥ Also cf. भुक्त्वा स्नात्वा च देवानर्चति which is given as an instance of अक्रम in वाग्भट's काव्यानुशासन (NSP edn. p. 28).

**20, l. 1.** रत्नमाला — रत्नमाला or ज्योतिषरत्नमाला is an Astronomical work dealing with the मुहूर्तs and was written by श्रीपति (about 1039 A.D.). It is commented upon in Marathi by the author himself and by माधव in Sanskrit. For further particulars, see S. B. Dikshit's Hist. of Ind. Astronomy (in Marathi. Poona, 2nd edn. 1931.) pp. 470 f.; V. L. Bhave, महाराष्ट्रसारस्वत (Poona, 1919) pp. 20f.; S. Chitrava, मध्ययुगीनचरित्रकोश (Poona, 1937) p. 785; and Bhārata Itihāsa Saṁs'odhana Maṇḍala, Poona, 2nd Annual Report, pp. 81–117 (here a Ms. of the रत्नमाला with author's मराठी com. is described and long extracts from the com. are given).

**21.** Constru : विदितपरमतत्त्वाः ते योगिनोऽपि यत्र (यस्मिन् कालविषये) नितान्तं प्रभवविरतिमध्यज्ञानवन्ध्याः (वर्तन्ते) तं इहविश्वजन्मालयानां निमित्तं, भवद्भिः अनुमितं, ईशं कालं वन्दे Here the क्रमहीनदोष arises due to the expression प्रभवविरतिमध्यज्ञानवन्ध्याः which should have been प्रभवमध्यविरतिज्ञानवन्ध्याः.

**21, l. 1.** This linve explains how the fault क्रमहीन arises in the above stz. उत्पत्ते … सम्भवात्, स्थिति, existence becomes impossible if (विरति =) लय immediately follows the (प्रभव = ) उत्पत्ति, origination.

**22.** This stanza describes an incident in the hunting expedition of Das'aratha. Here the क्रमहीनदोष arises because in the fourth line, instead of the regular formation पातयामास, पातयां प्रथममास is used, i.e. पातयामास is ungrammatically split up into two by the interposing of प्रथम between पातयां and आस. पातयामास is the periphrastic perfect fr. पत् causal, formed by P. 3.1.35, कास्प्रत्ययादाममन्त्रे लिटि, and P. 3.1.40, कृञ्चानुप्रयुज्यते लिटि, according to which no word can come between आम् and the perfect forms of कृ, (अस् or भू). कालिदास, however, has used such irregular construction twice more viz. R. 13.36, प्रभ्रंशयां यो नहुषं चकार and R. 16.86, संयोजयां विधिवदास समेतबन्धुः. Though some commentators try to defend this construction of कालिदास (see Nandargikar's edn. of Raghuvaṁs'a, Notes pp. 186f.) Jñānendrasarasvati, in his तत्त्वबोधिनीटीका on सिद्धान्तकौमुदी on कृञ्चानुप्र॰) clearly states that these are mistakes. Read —कथं तर्हि तं पातयां

प्रथममास पपात पश्चात्, प्रभ्रंशयां यो नहुषं चकार' इति । प्रमाद यतायन् । न च विपरीतप्रयोगनिवृत्तिमात्रे सूत्रस्य तात्पर्यात्, पश्चात्प्रयोगो व्यवहितोऽपि न दुष्यतीति वाच्यम्; आमन्तस्य विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं चेति वार्तिकविरोधात् । In वाग्भट's काव्यालङ्कार this stz. is given as an instance of निर्लक्षणदोष.

**22, l. 1.** **अत्र कृभ्वस्तियोगे** etc. The emendation क्रमाद्घातोराम्यासप्राप्तौ in place of क्रमाद्घातोरासप्राप्तौ is made on the advice of Pandit Mahes'varas'āstrī Joshi. According to him, it is incorrect to say क्रमाद्घातोरासप्राप्तौ (सत्यां) as आस is not directly added on to the root (here पातय causal of पत्) but to the आम् which is added to the root by कास्प्रत्ययादाममन्त्रे लिटि; and the emendation is to be explained thus : क्रमाद्धातोः आमि कृते अव्यवहितोत्तर – आसप्राप्तौ (सत्यां) i.e. when आस should have been used immediately after आम् which is to be added to the root. कृभ्वस्तियोगे – this is a reference to the सूत्र, कृञ्चानुप्रयुज्यते लिटि, in which the use of the Perfect forms of भू and अस् along with those of कृ are prescribed to be added to आम्, by अनुवृत्ति of भू and अस्. प्रथमपदव्यभिचारेण, due to the violation (of the regular order of words पातय् + आम् + आस) by (the insertion of) the word 'प्रथम' between पातयां and आस).

**23.** असंमित, verbocity or use of disproportionate number of words as compared to the sense. Cf. वाग्भटालङ्कार 2.20, शब्दार्थौ यत्र न तुलाविधृताविव संमितौ । तदसंमितमित्याहुर्वाक्यं वाक्यविदो यथा ॥ तौल्यं, equality, balance. मरुद्वेपिराजराजितविग्रहः, मरुतं वेष्टुं आशितुं शीलं येषां ते मरुद्वेपिणः तेषां राजा वासुकिः तेन राजितः (शोभितः) विग्रहः शरीरं यस्य सः. Here the sense is – S'iva appears beautiful with his body adorned with the snake-king Vāsuki. But instead of the straightforward or direct expression नागराज, the roundabout expression, 'the king of those who live on wind' is used, and hence the fault असंमित arises.

**23, l. 1.** रसमञ्जरी is a work on Rhetorics, dealing for the most part with varieties and sub-varieties of नायिकाs, and नायकs, their friends and the sentiment of शृङ्गार of two types. It was written by भानुदत्त who according to Mm. P. V. Kane flourished between the end of the 13th and beginning of the 14th century A.D. In our text, the edn. of this work in हरिकृष्णनिबन्धमणिमाला, Benares, 1929, is referred to.

**24.** Acc. to our author, this stz. is an instance of असंमितदोष as the sense is only that राधा saw कृष्ण, and the use of so many words to describe कृष्ण and the tears of राधा causes this fault. But in the com. सुरभी of बदरीनाथशर्मा, on the रसमञ्जरी, the significance and the necessity of every word in this stz., which is given to illustrate the 3rd variety of अनुशयाना परकीया नायिका (here, राधा) is explained.

**25.** This stz. describes the tank dug by one of the kings that had assembled for the स्वयंवर of दमयन्ती. Read °क्रोडक्रीडद्द्विजाली° in the second line.

Trans.—This [king] has caused a tank to be dug, where the waves cause rippling sound due to the wind from the fluttering wings of the flock of birds sporting on the sheet of water rich in the fragrance of the petals of blooming blue lotuses, and [the tank] which pleases the eyes of the travellers whose heat of summer is removed by its banks full of rows of trees having abundant fresh green leaves in the cluster of their branches.

